श्रीयादवगिरि श्रीशानुदासग्रन्थमाला प्रकाशनम्—२०

# यतिराजविंशतिः

श्रीमत्परमहंसेत्यादि विरुदभूषितैः विशदवाक् शिखामणिभिः

**श्रीवरवरमुनिभिः**

अनुगृहीता

यतीन्द्रप्रवणाख्यस्य षट्शताब्दोत्सवे गुरोः ।
सौम्ये तुलायां मूलर्क्षे यादवाद्रौ प्रकाशिता ॥

13-11-1969

EDITED AND PUBLISHED BY

A. N. SRINIVASA IYENGAR

॥ श्रीमते रामानुजाय नमः ॥

# यतिराजविंशतिः



श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् ।
यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥

यस्स्तुतिं यतिपतिप्रसादिनीं व्याजहार यतिराजविंशतिम् ।
तं प्रपन्नजनचातकांबुदं नौमि सौम्यवरयोगिपुङ्गवम् ॥

*श्रीमाधवांघ्रिजलजद्वयनित्यसेवा-
प्रेमाविलाशयपरांकुशपादभक्तम् ।
कामादिदोषहरमात्मपदाश्रितानां
रामानुजं यतिपतिं प्रणमामि मूर्ध्ना ॥ १ ॥

श्रीरङ्गराजचरणाम्बुजराजहंसं
श्रीमत्परांकुशपदाम्बुजभृङ्गराजम् ।
श्रीभट्टनाथपरकालमुखाब्जमित्रं
श्रीवत्सचिह्नशरणं यतिराजमीडे ॥ २ ॥

वाचा यतीन्द्र ! मनसा वपुषा च युष्मत्-
पादारविन्दयुगलं भजतां गुरूणाम् ।
कूराधिनाथकुरुकेशमुखाद्यपुंसां
पादानुचिन्तनपरः सततं भवेयम् ॥ ३ ॥

---

* द्विवारमनुसन्धेयम्

नित्यं यतीन्द्र ! तव दिव्यवपुस्स्मृतौ मे
सक्तं मनो भवतु वाग्गुणकीर्तनेऽसौ ।
कृत्यश्च दास्यकरणे तु करद्वयस्य
वृत्त्यन्तरेऽस्तु विमुखं करणत्रयञ्च ॥ ४ ॥

अष्टाक्षराख्य-मनुराज-पदत्रयार्थ-
निष्ठां ममात्र वितराद्य यतीन्द्रनाथ !
शिष्टाग्रगण्यजनसेव्य ! भवत्पदाब्जे
हृष्टास्तु नित्यमनुभूय ममास्य बुद्धिः ॥५॥

अल्पापि मे न भवदीयपदाब्जभक्तिः
शब्दादिभोगरुचिरन्वहमेधते ह ।
मत्पापमेव हि निदानममुष्य नान्यत्
तद्वारयार्य ! यतिराज ! दयैकसिन्धो ॥ ६ ॥

वृत्त्या पशुर्नरवपुस्त्वहमीदृशोऽपि
श्रुत्यादिसिद्धनिखिलात्मगुणाश्रयोऽयम् ।
इत्यादरेण कृतिनोपि मिथः प्रवक्तुम्
अद्यापि वञ्चनपरोऽत्र यतीन्द्र ! वर्ते ॥ ७ ॥

दुःखावहोऽहमनिशं तव दुष्टचेष्टः
शब्दादिभोगनिरतः शरणागताख्यः ।
त्वत्पादभक्त इव शिष्टजनौघमध्ये
मिथ्याचरामि यतिराज ! ततोऽस्मि मूर्खः ॥८॥

नित्यं त्वहं परिभवामि गुरुञ्च मन्त्रं
तद्देवतामपि न किंचिदहो ! बिभेमि ।
इत्थं शठोऽप्यशठवद्भवदीयसङ्घे
हृष्टश्चरामि यतिराज ! ततोऽस्मि मूर्खः ॥ ९ ॥

हा ! हन्त ! हन्त ! मनसा क्रियया च वाचा
योऽहं चरामि सततं त्रिविधापचारान् ।
सोऽहं तवाप्रियकरः प्रियकृद्वदेव
कालं नयामि यतिराज ! ततोऽस्मि मूर्खः ॥१०॥

पापे कृते यदि भवन्ति भयानुताप-
लज्जाः पुनःकरणमस्य कथं घटेत ।
मोहे नमे न भवदीयभयादिलेशः
तस्मात्पुनःपुनरघं यतिराज ! कुर्वे ॥ ११ ॥

अन्तर्वहिस्सकलवस्तुषु सन्तमीशं
अन्धः पुरस्स्थितमिवाहमवीक्षमाणः ।
कन्दर्पवश्यहृदयस्सततं भवामि
हन्त ! त्वदग्रगमनस्य यतीन्द्र ! नार्हः ॥१२॥

तापत्रयीजनितदुःखनिपातिनोऽपि
देहस्थितौ मम रुचिस्तु न तन्निवृत्तौ ।
एतस्य कारणमहो ! मम पापमेव
नाथ ! त्वमेव हर तद्यतिराज ! शीघ्रम् ॥१३॥

वाचामगोचरमहागुणदेशिकाग्र्य-
कूराधिनाथकथिताखिलनैच्यपात्रम् ।
एषोऽहमेव न पुनर्जगतीदृशस्तत्
रामानुजार्य ! करुणैव तु मद्गतिस्ते ॥ १४ ॥

शुद्धात्मयामुनगुरूत्तमकूरनाथ-
भट्टाख्यदेशिकवरोक्तसमस्तनैच्यम् ।
अद्यास्त्यसंकुचितमेव मयीह लोके
तस्माद्यतीन्द्र ! करुणैव तु मद्गतिस्ते ॥ १५ ॥

शब्दादिभोगविषया रुचिरस्मदीया
नष्टा भवत्विह भवद्दयया यतीन्द्र !
त्वद्दासदासगणनाचरमावधौ यः
तद्दासतैकरसताविरता ममास्तु ॥ १६ ॥

श्रुत्यग्रवेद्यनिजदिव्यगुणस्वरूपः
प्रत्यक्षतामुपगतस्त्विह रङ्गराजः ।
वश्यस्सदा भवति ते यतिराज ! तस्मात्
शक्तस्स्वकीयजनपापविमोचने त्वम् ॥ १७ ॥

कालत्रयेऽपि करणत्रयनिर्मितातिपापक्रियस्य
शरणं भगवत्क्षमैव ।
सा च त्वयैव कमलारमणेऽर्थिता यत्
क्षेमस्स एव हि यतीन्द्र ! भवच्छ्रितानाम् ॥१८॥

*श्रीमन्यतीन्द्र ! तव दिव्यपदाब्जसेवां
श्रीशैलनाथकरुणापरिणामदत्ताम् ।
तामन्वहं मम विवर्धय नाथ ! तस्याः
कामं विरुद्धमखिलं च निवर्तय त्वम् ॥ १९ ॥

*विज्ञापनं यदिदमद्य तु मामकीन-
मङ्गीकुरुष्व यतिराज ! दयाम्बुराशे !
अज्ञोऽयमात्मगुणलेशविवर्जितश्च
तस्मादनन्यशरणो भवतीति मत्वा ॥ २० ॥

इति यतिकुलधुर्यमेधमानैः श्रुतिमधुरैरुदितैः प्रहर्षयन्तम् ।
वरवरमुनिमेव चिन्तयन्ती मतिरियमेति निरत्ययं प्रसादम् ॥ २१ ॥

न चेद्रामानुजेत्येषा चतुरा चतुरक्षरी ।
कामवस्थां प्रपद्यन्ते जन्तवो हन्त ! मादृशः ॥२२॥

पुण्याम्भोजविकासाय पापध्वान्तक्षयाय च ।
श्रीमानाविरभूद्भूमौ रामानुजदिवाकरः ॥ २३ ॥

*तृणीकृतविरिञ्चादि-निरंकुशविभूतयः ।
रामानुजपदाम्भोज-समाश्रयणशालिनः ॥ २४ ॥

यत्स्मृतिस्सर्वसिद्धीनामन्तरायनिवारिणी ।
तस्मै श्रीरम्यजामातृमुनये विदधे नमः ॥ २५ ॥

---

* द्विवारमनुसन्धेयम्

श्रीमद्रङ्गं जयतु परमं धाम तेजोनिधानं
भूमा तस्मिन्भवतु कुशली कोऽपि भूमासहायः ।
दिव्यं तस्मै दिशतु विभवं देशिको देशिकानां
काले काले वरवरमुनिः कल्पयन्मङ्गलानि ॥२६॥

मङ्गलं मुनिवर्याय रम्यजामातृयोगिने ।
यच्छात्रभावं सम्प्राप्तः श्रीशः श्रीरङ्गनायकः ॥२७॥

श्रीमते सौम्यजामातृमुनीन्द्राय महात्मने ।
श्रीरङ्गवासिने भूयात् नित्यश्रीर्नित्यमङ्गलम् ॥२८॥

इति
श्री वरवरमुनिभिरनुगृहीता
यतिराजविंशतिः

